त्वेन च प्रतिपादयिष्यमाणत्वात्। न पुनः पर्यायोक्ते भामहोदाहृत-सदृशे व्यङ्ग्यस्यैव प्राधान्यम्। वाच्यस्य तत्रोपसर्जनीभावेनाविवक्षितत्वात्।

(दी० शि०)—पर्यायोक्तालङ्कारेऽपि यदि प्राधान्येन व्यङ्ग्यत्वं व्यज्यमानस्यार्थस्य प्राधान्यं स्यादित्यर्थः तदा तस्य ध्वनिरूपत्वाद् ध्वनावन्तर्भावः। न तु ध्वनेस्तत्रान्तर्भावः-न तु तावन्मात्र एव ध्वनिरित्यर्थः। यतो ध्वनिर्महाविषयः विविधरूपः असीमक्षेत्रः, अङ्गी अवयववान् काव्यविशेषरूप इत्यर्थः। अलङ्कारादयस्त्विमे तस्याङ्गविशेषरूपा एवेत्यग्रे प्रतिपादयिष्यते। किन्तु भामहेन यत् पर्यायोक्तमुदाहृतं—

गृहेष्वध्वसु वा नान्नं भुञ्ज्महे यदधीतिनः।

विप्रा न भुञ्जते॥ इति तत्र 'तच्च रसदाननिवृत्तये' इति व्यङ्ग्यस्य न किञ्चिच्चारुत्व मस्तीति न तस्य प्राधान्यम्। एवं तदनुसारितया तत्सदृशं यदुदाहरणान्तरमपि कल्प्यते तत्रापि नैव व्यङ्ग्यस्य प्राधान्यं यतो वाच्यस्य तत्र नोपसर्जनीभावोविवक्षितः, प्रत्युत तत्र वाच्य एव प्राधान्यं भजते।

(अनु०)—पर्यायोक्त अलङ्कार में भी यदि व्यज्यमान अर्थ की प्रधानता रहे तो वह ध्वनिरूप होगा और उसका ध्वनि में अन्तर्भाव हो जायगा, न कि ध्वनि का उसमें अन्तर्भाव होगा—क्योंकि ध्वनि विशाल क्षेत्र (अथवा विविधरूप) वाला एवं अङ्गी अर्थात् अवयवों से युक्त अथवा काव्यविशेषरूप है। ये अलङ्कारादि तो उसके अङ्ग-विशेषरूप ही हैं—यह आगे बताएँगे। किन्तु भामह ने तो जैसा पर्यायोक्त का उदाहरण दिया है—"घरों या मार्गों में हम वह अन्न नहीं खाते, जो अधीती ब्राह्मण नहीं खा लेते।" यहाँ भगवान् के इस वचन का व्यङ्ग्य है कि जिससे रस-दान न हो सके, अर्थात् कोई हमें विषरस न दे सके। (किन्तु यह व्यङ्ग्य 'तच्च रसदान-निवृत्तये' इस चतुर्थ पादरूपी उक्ति से वाच्यरूप से कह भी दिया जाता है।) इसके व्यङ्ग्य में कोई चारुता नहीं है। अतः उसकी प्रधानता नहीं है। इसी प्रकार तत्सदृश जो अन्य उदाहरण भी कल्पित किया जाय तो उसमें भी व्यङ्ग्य की प्रधानता न होगी, क्योंकि वहाँ वाच्य की गौणता विवक्षित नहीं होती (प्रत्युत वाच्य ही अपनी प्रधानता रखता है)।

(ध्व०)—अपह्नुतिदीपकयोः पुनर्वाच्यस्य प्राधान्यं व्यङ्ग्यस्य चानुयायित्वं प्रसिद्धमेव।

(दी० शि०)—अपह्नुतिदीपकनाम्नोरलङ्कारयोस्तु वाच्योऽर्थ एव प्रधानो, व्यङ्ग्योऽर्थः पुनरुपमारूपो वाच्यस्यैवानुयायी उपकारक इति तत् प्रसिद्धमेव प्रामाणिकमेव किञ्चित् पूर्वमिहैव प्रसाधितमेवेतिवा।

(अनु०)—अपह्नुति, दीपक अलंकारों में तो वाच्य अर्थ ही प्रधान होता है और उपमारूप व्यङ्ग्य अर्थ का ही अनुयायी या उपकारक होता है, यह प्रसिद्ध ही है (अथवा यह अभी सिद्ध कर चुके ही हैं)।

( ध्व० )—सङ्करालङ्कारेऽपि यदालङ्कारोऽलङ्कारान्तरच्छायामनुगृह्णाति, तदा व्यङ्ग्यस्य प्राधान्येनाविवक्षितत्वान्न ध्वनिविषयत्वम्। अलङ्कारद्वयसम्भावनायांतु वाच्यव्यङ्ग्योः समं प्राधान्यम्। अथ वाच्योपसर्जनीभावेन व्यङ्ग्यस्य तत्रावस्थानं तदा सोऽपि ध्वनिविषयोऽस्तु, न तु स एव ध्वनिरिति वक्तुं शक्यम्, पर्यायोक्तनिर्दिष्टन्यायात्। अपिच सङ्करालङ्कारेऽपि च क्वचित् सङ्करोक्तिरेव ध्वनिसम्भावनां निराकरोति।

(दी० शि०)—सङ्करालङ्कारस्य प्रकारविशेषे यदैकोऽलङ्कारोऽन्यस्यालङ्कारस्यच्छायां कान्ति शोभांवाऽनुगृह्णाति वर्धयति तदा व्यङ्ग्यस्य अनुग्राहकस्यालङ्कारस्य प्राधान्येनाविवक्षितत्वाद् उपसर्जनीभावात् तादृशे संकरे न ध्वनित्वम्। अन्यस्मिन्नपि सङ्करभेदे ध्वनेर्विषयत्वं निरस्यति अलङ्कारद्वयसम्भावनायामिति—यत्रद्वयोरलङ्कारयोः ( बहूनां वाऽलङ्काराणाम् एकतर-परिग्रहे साधकबाधकप्रमाणाभावात् सन्देहरूपः सङ्करः तत्र वाच्यस्य व्यङ्ग्यस्य चालङ्कारस्य तुल्यं प्राधान्यम् इति द्वयोरान्दोल्यमानत्वान्न तत्रापि ध्वनित्वम्।

ननु यत्र सङ्करे व्यङ्ग्यमेव प्राधान्येन भाति तत्र किं कर्तव्यम्—यथा—

'होइ ण वा गुणाणुराओ खलाणं णवरं पसिद्धिसरणाणं।
किर पहिणुसइ ससिमणं चन्दे ण पिआमुहे दिट्ठे॥

( भवति न गुणानुरागः खलानां केवलं प्रसिद्धिशरणानाम्।
किल प्रस्नौति शशिमणिः चन्द्रे न प्रियामुखे दृष्टे॥ इतिच्छाया )

इत्यत्रार्थान्तरन्यासस्तावद्वाच्यत्वेनाभाति व्यतिरेकापह्नुती तु व्यङ्ग्यत्वेन प्रधानतयेत्यभिप्रायेण 'अथ वाच्योपसर्जनीभावानेत्याद्याशङ्क्य समादधाति—तदा सोऽपीत्यादि—ध्वनिविषयः ध्वनावन्तर्भूतोऽस्तु—तदातु सङ्करालङ्कार एवायं न भवति, अपितु ध्वनेरेव भेदविशेषः। न चपुनरयमेवध्वनिरित्यपि मन्तव्यं ध्वनेर्महाविषयत्वादङ्गित्वाच्च—यथा हि प्राक् पर्यायोक्तप्रसङ्गे प्रतिपादितम्।

किं च सङ्करालङ्कारस्य सङ्करतैव तत्र ध्वनिशङ्कां निरस्यति यतो नीरक्षीरवदलङ्कारमिश्रणे हि सङ्करः, न चैवंविधेमिश्रणे कस्यचित् प्राधान्यमपरस्य गुणत्वं वा शक्यमवगन्तुम्। व्यङ्ग्यप्राधान्ये तु ध्वनिः। कथमसौ तादृशे सङ्करे सम्भवेत्। अत एवाह—अपिचेत्यादि—क्वचिदपि सङ्करालङ्कारे सङ्करस्य सर्वेष्वपिप्रभेदेष्वित्यर्थः सङ्करोक्तिरेव ध्वनिसम्भावनां निराकरोति दूरं निरस्यति।

(अनु०)—सङ्करालङ्कार में भी जहाँ एक अलङ्कार दूसरे अलङ्कार की कान्ति को अनुगृहीत ( पुष्ट ) करता है, वहाँ व्यङ्ग्य के प्रधानरूप से विवक्षित न होने के कारण ध्वनि की विषयता ( क्षेत्र ) नहीं होती। दो अलङ्कारों की सम्भावना ( सन्देहसङ्कर ) में तो वाच्य तथा व्यङ्ग्य दोनों की तुल्य प्रधानता होती है। किन्तु यदि वहाँ वाच्य के गौण रहने के साथ व्यङ्ग्य की व्यवस्था हो तो वह भी ध्वनि का विषय हो सकता है—

न कि केवल वही ( उतना ही ) ध्वनि कहा जा सकता है—पर्यायोक्त के प्रसङ्ग में उल्लिखित सिद्धान्त के ही अनुसार। और ( एक बात ) यह भी कि सङ्करालङ्कार में कहींभी ( सर्वत्र ) सङ्कर यह वचन ( विशेषण ) ही ध्वनि सम्भावना का निराकरण कर देता है।

(ध्व०)—अप्रस्तुतप्रशंसायामपि यदा सामान्यविशेषभावान्निमित्तनिमित्ति-भावाद्वा अभिधीयमानस्याप्रस्तुतस्य प्रतीयमानेन प्रस्तुतेनाभिसम्बन्धः तदाभिधी-यमानप्रतीयमानयोः सममेव प्राधान्यम्। यदा तावत्सामान्यस्याप्रस्तुतस्याभिधीय-मानस्य प्राकरणिकेन विशेषेण प्रतीयमानेन सम्बन्धस्तदा विशेषप्रतीतौसत्यामपि प्राधान्येन, तत्सामान्येनाविनाभावात्सामान्यस्यापि प्राधान्यम्। यदापि विशेषस्य सामान्यनिष्ठत्वं तदापि सामान्यस्य प्राधान्ये सामान्ये सर्वविशेषाणामन्तर्भावाद्विशेष-स्यापि प्राधान्यम्। निमित्तनिमित्तिभावे चायमेवन्यायः। यदा तु सारूप्यमात्रव-शेनाप्रस्तुतप्रशंसायामप्रकृतप्रकृतयोः सम्बन्धस्तदाप्यप्रस्तुतस्य सरूपस्याभिधीय-मानस्य प्राधान्येनाविवक्षायां ध्वनावेवान्तःपातः। इतरथा त्वलङ्कारान्तरमेव।

(दी० शि०)—अप्रस्तुतस्य अप्राकरणिकस्य प्रशंसा वाच्यरूपेण वर्णनं प्रस्तुतस्य प्राकरणिकस्य च व्यङ्ग्यता यत्र सोऽयमलङ्कारः। तत्र च प्रस्तुताप्रस्तुतयोः सम्बन्ध-स्त्रिविधो भवति—सामान्यविशेषरूपः, निमित्त-निमित्तिरूपः, सरूपलक्षणश्च। तत्र प्रथमे प्रकारद्वये यदा वाच्यरूपस्याप्रस्तुतस्य व्यङ्ग्यरूपेण प्रस्तुतेनाभिसम्बन्धोभवति तदा वाच्यव्यङ्ग्ययोस्तुल्यमेव प्राधान्यम्! तथाहि—सामान्यविशेषभावे द्वयी गतिः—कदाचित् अप्रस्तुतं सामान्यं वाच्यरूपं भवति, व्यङ्ग्यरूपश्च प्रस्तुतो विशेषः। तत्र तु विशेषस्य प्राधान्येन प्रतीतावपि सामान्यस्यापि विशेषेण सह अविनाभावसम्बन्धात् प्राधान्यम्। कदाचिच्च तत्र विशेषः अप्रस्तुतः वाच्यरूपः सामान्यं प्रस्तुतं तु व्यङ्ग्यरूपं भवति—तत्रापि सामान्यस्य प्राधान्येन प्रतीतावपि सामान्ये सर्वविशेषाणामन्तर्भावाद् विशेषस्यापि प्राधान्यम्।

निमित्तनिमित्तिभावेऽपि चायमेव सिद्धान्तः। तत्र कदाचिन्निमित्तम् अप्रस्तुतं वाच्यं भवति तेन च नैमित्तिकं प्रस्तुतं व्यज्यते। तदा च व्यङ्ग्यं नैमित्तिकमिव तद्व्यञ्जकं वाच्यरूपं निमित्तमपि अनुप्राणकत्वेन प्रधानीभवतीत्युभयोः समं प्राधान्यम्। कदाचिच्च नैमित्तिकमप्रस्तुतं वाच्यं भवति तेन च निमित्तं प्रस्तुतं व्यज्यते। अत्रापि च व्यङ्ग्यं निमित्तमिव तद्व्यञ्जकं वाच्यरूपमपि नैमित्तिकं तदनुप्राणितत्वेन आत्मानं प्रधानीकरो-तीत्युभयोः समं प्राधान्यम्।

वस्तुतस्तु सत्कार्यवादसिद्धान्तानुसारेण कार्यकारणयोस्तादात्म्यमङ्गीकृतं भवति—तेन च कार्यस्य प्राधान्ये कारणस्यापि प्राधान्यम्, कारणस्य च प्राधान्ये कार्यस्यापि प्राधान्यं स्वत एव सिद्धं भवतीति तत्र वाच्यव्यङ्ग्ययोः समं प्राधान्यं स्थितमेव।

एवं द्वौ प्रकारौ प्रत्येकं द्विविधौ विचार्य तृतीयः प्रकारः परीक्ष्यते सारूप्यलक्षणः—तत्रापि द्वौ प्रकारौ कदाचिद् अप्रस्तुताद् वाच्याच्चमत्कारः व्यङ्ग्यं तु तन्मुखप्रेक्षीत्यतो.

वाच्यस्यैव चमत्कारः नतु व्यङ्ग्यस्य कथंचनापीति। यदि पुनः अप्रस्तुतेन वाच्यरूपेण प्रस्तुतं व्यज्यमानं चमत्कारकारि तदा तस्य ध्वनावन्तर्भावः स तु ध्वनिरेव। इतरथा प्रस्तुतस्य व्यङ्ग्यस्य चमत्कारकारित्वाभावे तु अलङ्कारान्तरम् अलङ्कारभेद एव ( "अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये"—मेदिनी ) अथवा अलङ्कारविशेष एव ( 'अन्तरशब्दो विशेषवाची"—इति लोचनकाराः )

वृत्तौ सङ्करालङ्कारादावित्यत्र यदादिग्रहणं कृतं तेन भाव-परिकर-व्याजस्तुत्यादयोऽपि सम्भाव्यमान—व्यङ्ग्यानुप्रवेशाद् गृह्यन्ते।

(अनु०)—अप्रस्तुत प्रशंसा में भी जब सामान्य-विशेष रूप से अथवा निमित्त-निमित्ति-रूप से वाच्यरूप अप्रस्तुत का व्यङ्ग्यरूप प्रस्तुत के साथ सम्बन्ध होता है, तब वाच्य और व्यङ्ग्य दोनों का समान ही प्राधान्य रहता है। और जब वाच्यरूप अप्रस्तुत सामान्य का व्यङ्ग्यरूप प्रस्तुत विशेष के साथ सम्बन्ध होता है तब व्यङ्ग्य ( विशेष ) की प्रधान रूप से प्रतीति होने पर भी, उस ( व्यङ्ग्यरूप विशेष ) का सामान्य ( वाच्यरूप ) के साथ अविनाभावसम्बन्ध होने के कारण, सामान्य का भी प्राधान्य रहता है। और जब विशेष सामान्य-निष्ठ होता है ( अर्थात् जब वाच्यरूप अप्रस्तुत विशेष से प्रस्तुत सामान्य व्यङ्ग्य होता है ) तब भी सामान्य के प्राधान्य रहने पर, सामान्य में ही सभी विशेषों का अन्तर्भाव होने से, विशेष का भी प्राधान्य होता है। निमित्त-निमित्ति-भाव में भी यही नियम लागू होता है। किन्तु जब सादृश्य-मूलक अप्रस्तुतप्रशंसा में अप्रस्तुत और प्रस्तुत का सम्बन्ध होता है तब भी वाच्यरूप अप्रस्तुत तुल्य का प्राधान्य अविवक्षित होने पर उसका ध्वनि में अन्तर्भाव हो जाएगा ( तब वह ध्वनि कहलाएगा अप्रस्तुतप्रशंसा अलङ्कार नहीं ) अन्यथा तो अलङ्कारविशेष ( प्रस्तुतप्रशंसा ) ही रहेगा।

( ध्व० )—तदयमत्र संक्षेपः—

व्यङ्ग्यस्य यत्राप्राधान्यं वाच्यमात्रानुयायिनः।
समासोक्त्यादयस्तत्र वाक्यालङ्कृतयः स्फुटाः॥
व्यङ्ग्यस्य प्रतिभामात्रे वाच्यार्थानुगमेऽपि वा।
न ध्वनिर्यत्र वा तस्य प्राधान्यं न प्रतीयते॥
तत्परावेव शब्दार्थौ यत्र व्यङ्ग्यं प्रतिस्थितौ।
ध्वनेः स एव विषयो मन्तव्यः सङ्करोज्झितः॥

(दी० शि०)—तत्र सर्वत्र साधारणमुत्तरं दातुमुपक्रमते तदयमिति—यत्र काव्ये वाच्यमात्रानुयायिनो वाच्यमेवोपकुर्वाणस्य व्यङ्ग्यस्य अप्राधान्यम् तत्र समासोक्त्यादयः वाच्यालङ्कृतयः अर्थालङ्काराः स्फुटाः।

एवं च व्यङ्ग्यस्य प्रतिभामात्रे आभासमात्रे यथा उपमादौ, वाच्यार्थानुगमे वाच्यार्थानुसरणे यथा समासोक्त्यादौ च सति, किं च यत्रापि तस्य व्यङ्ग्यस्य प्राधान्यं न प्रतीयते, तत्र सर्वत्र ध्वनिर्न भवतीत्यर्थः।

तर्हि क्व ध्वनिर्भवतीत्याकाङ्क्षायामाह—यत्र काव्ये शब्दार्थौ व्यङ्ग्यं प्रति स्थितौ व्यङ्ग्यं प्राधान्येन प्रत्याययन्तौ स्थितौ स एव सङ्करेण अलङ्कारमिश्रणेन उज्झितो रहितः ध्वनेर्विषयो मन्तव्यः—तत्काव्यमेव ध्वनिकाव्यमिति मन्तव्यमित्यर्थः।

( अनु० )—तो यह सारांश हुआ—

जिस काव्य में व्यङ्ग्य का, वाच्योपकारक होने के कारण, प्राधान्य नहीं रहता, वहाँ समासोक्ति आदि वाच्यालङ्कार स्फुट होते हैं।

और इस प्रकार व्यङ्ग्य के आभासमात्ररूप में रहने पर—जैसे उपमा आदि में, तथा जहाँ भी उस व्यङ्ग्य की प्रधानता न प्रतीत होती हो, वहाँ सर्वत्र ध्वनि नहीं होती।

जिस काव्य में शब्द और अर्थ व्यङ्ग्य को प्रधान रूप से व्यक्त करते रहते हैं वही ध्वनि का विषय होता है, और वहाँ ( पूर्वोक्ति समासोक्ति आदि ) अलङ्कारों का मिश्रण नहीं रहता।

( ध्व० )—तस्मान्न ध्वनेरन्यत्रान्तर्भावः। इतश्चनान्तर्भावः, यतः काव्य-विशेषोऽङ्गी ध्वनिरिति कथितः। तस्य पुनरङ्गानि अलङ्कारा गुणा वृत्तयश्चेति प्रतिपादयिष्यन्ते। न चावयव एव पृथग्भूतोऽवयवीति प्रसिद्धः। अपृथग्भावे तु तदङ्गत्वं तस्य। न तु तत्त्वमेव। यत्रापि वा तत्त्वं तत्रापि ध्वनेर्महाविषयत्वान्न तन्निष्ठत्वमेव।

( दी० शि० )—तस्मादुक्तहेतोः ध्वनेः ध्वनिकाव्यस्य अन्यत्र अलङ्कारादिषु नान्तर्भावः। हेत्वन्तरमपि दर्शयति—इतश्चेत्यादि—इतोऽपि हेतोर्नान्तर्भावः यतः ध्वनिरिति तु अङ्गी अलङ्कारादिविविधावयवविशिष्टं विशिष्टप्रकारकं काव्यमुच्यते। अलङ्कारा गुणा वृत्तयश्चेति ये प्रसिद्धास्ते पुनस्तस्य काव्यस्याङ्गभूता एवेति वक्ष्यन्ते। न च एकैकः अवयव एव पृथक् स्थितः सन्नवयवीति प्रसिद्धो भवति। अपृथग्भावे अवयविनो मध्ये स्थितस्य तु अवयवस्य केवलमवयविनोऽङ्गविशेषमात्रत्वं न तु तत्त्वं सम्पूर्णावयवित्वमेवे-त्यर्थः। यत्रापि वा कस्यचिद् अलङ्कारादेः तत्र व्यङ्ग्यस्य प्राधान्यात् तत्त्वं ध्वनित्वं स्यात् तत्रापि तावन्मात्र एव न ध्वनेर्निष्ठता स्थितिः यतोध्वनिर्महाविषयः तदतिरिक्ते स्थले तस्य भूयिष्ठं विद्यमानत्वात्।

( अनु० )—अतः उक्त हेतु के कारण ध्वनिकाव्य का अन्यत्र (अर्थात् अलङ्कारादिकों में) अन्तर्भाव नहीं हो सकता। और इस कारण भी अन्तर्भाव नहीं हो सकता कि ध्वनि तो ( अलङ्कारादि-विविध-) अवयव-विशिष्ट एक विशेष प्रकारका काव्य है। और अलङ्कार, गुण, वृत्ति आदि जो प्रसिद्ध हैं वे उस काव्य के अङ्गभूत हैं—यह आगे कहेंगे। प्रत्येक अङ्ग पृथक् स्थित होकर अङ्गीरूप से प्रसिद्ध नहीं हो सकता। और अवयवी के बीच रहकर तो अवयव केवल अवयव ( अङ्ग ) ही माना जाता है, सम्पूर्ण अङ्गी नहीं। और यदि किसी अलङ्कार में व्यङ्ग्य अर्थ की प्रधानता के कारण अवयवित्व (ध्वनित्व) सम्भव

भी हुआ तो उतने मात्र में ही समस्त ध्वनि का अन्तर्भाव नहीं हो जाता, क्योंकि विशाल-क्षेत्रवाला ( महाविषय ) होने के कारण वह केवल उतने में ही स्थित नहीं हो सकता।

( ध्व० )—'सूरिभिः कथित' इति विद्वदुपज्ञेयमुक्तिः न तु यथाकथञ्चित् प्रवृत्तेति प्रतिपाद्यते। प्रथमे हि विद्वांसो वैयाकरणाः, व्याकरणमूलत्वात् सर्वविद्यानाम्। ते च श्रूयमाणेषु ध्वनिरिति व्यवहरन्ति। तथैवान्यैस्तन्मतानुसारिभिः सूरिभिः काव्यतत्त्वार्थदर्शिभिर्वाच्यवाचकसम्मिश्रः शब्दात्मा काव्यमिति व्यपदेश्यो व्यञ्जकत्वसाम्याद्ध्वनिरित्युक्तः।

( दी० शि० )—विद्वद्भ्य उपज्ञा आद्यं ज्ञानं प्रथम उपक्रमो यस्या उक्तेरिति बहुव्रीहिः, विदुषामुपज्ञेति तत्पुरुषाश्रये तु 'उपज्ञोपक्रमं तदाद्याचिख्यासायाम्' इति पाणिनिसूत्रेण विद्वदुपज्ञमिति नपुंसकत्वं स्यात्। ध्वनिरितीयमुक्तिर्न यथाकथंचिद् एवमेव निर्मूला प्रवृत्तेत्यर्थः। तानेवविदुष उल्लिखति—वैयाकरणा हि प्रथमे मुख्या विद्वांसः ( यथोक्तं वाक्यपदीये भर्तृहरिणा—"रूपान्तरेण ते देवा विचरन्ति महीतले। ये व्याकरणसंस्कार-पवित्रितमुखा नराः ॥" इति ) यतो व्याकरणं सर्वविद्यानां मूलभूतम् ( तथा चोक्तं तत्रैव-"उपासनीयं यत्नेन शास्त्रं व्याकरणं महत्। प्रदीपभूतं सर्वासां विद्यानां यदवस्थितम् ॥" इति )। ते तत्रभवन्तः श्रूयमाणेषु वर्णेषु श्रवणेन्द्रियगोचरीक्रियमाणान् स्फोटकाभिव्यञ्जकान् वर्णानित्यर्थः ध्वनिरिति व्यवहरन्ति व्यपदिशन्ति। ( तथाहि—"प्रतीतपदार्थको लोके ध्वनिः शब्द इत्युच्यते" इति, "एवं तर्हि स्फोटः शब्दो ध्वनिः शब्दगुणः" इति च महाभाष्यम्। यः संयोगवियोगाभ्यां करणैरुपजन्यते। स स्फोटश्शब्दजश्शब्दो ध्वनिरियुच्यते बुधैः ॥ इत्यादि वाक्यपदीयं चापि। ) तथैव तेषां वैयाकरणानां मतं सिद्धान्तम् अनुसरन्तीत्येवंशीलैः स्फोटः शब्दो व्यङ्ग्यः ध्वनिस्तद् व्यञ्जक इति मतं स्वीकुर्वद्भिरित्यर्थः अन्यैः काव्यस्य तत्त्वभूतमर्थं ( व्यङ्ग्यमितियावत् ) पश्यन्ति जानन्तीत्येवंशीलैः काव्यमर्मज्ञैरित्यर्थः सूरिभिः बुधैः वाच्यश्च वाचकश्चेति वाच्यवाचकौ अर्थशब्दौ, तौ सम्मिश्रयतीति वाच्यवाचकसम्मिलितरूपः शब्दार्थ-सहित इति यावत् काव्यमितिनामभाक् शब्दात्मा शब्दस्वभावः शब्दस्वरूप इत्यर्थः व्यङ्ग्यार्थस्य प्राधान्येन व्यञ्जकत्वाद् ध्वनिरित्युक्तः। यथाहि—वैयाकरणैः अर्थप्रतिपादकत्वात् प्रधानभूतस्य स्फोटस्य व्यञ्जकः शब्दः ध्वनिरित्युक्तः तथैव काव्यमर्मज्ञैरपि प्राधान्येन व्यङ्ग्यार्थस्य व्यञ्जकं शब्दरूपं काव्यमपि ध्वनिरित्युक्तमिति तात्पर्यम्।

( अनु० )—इस उक्ति की विद्वानों से उपज्ञा अर्थात् प्रथम ज्ञान या आरम्भ हुआ है, न कि यह ऐसे ही ( निर्मूल ) चल पड़ी है यह बताते हैं। व्याकरणवेत्ता सर्वप्रधान विद्वान् होते हैं, क्योंकि व्याकरण सभी विद्याओं का मूलभूत है। तो, उन वैयाकरण मनीषियों ने श्रवणेन्द्रियगोचरीक्रियमाण स्फोटाभिव्यञ्जक वर्णों को 'ध्वनि' यह नाम दिया है। तन्मतानुसारी काव्यमर्मज्ञों ने वाच्यवाचकसम्मिलित शब्दस्वरूप काव्य इस नाम वाले को भी

( व्यङ्ग्य अर्थ का प्रधानता के साथ ) व्यञ्जक होने के कारण ध्वनि नाम दिया है ( अर्थात् जैसे वैयाकरणों ने अर्थप्रतिपादक होने के कारण प्रधानता-सम्पन्न स्फोटनामधारी शब्दस्वरूप की व्यञ्जकवर्ण-श्रुतियों को ध्वनि कहा था, वैसे ही काव्यमर्मज्ञों ने भी प्रधानतासम्पन्न व्यङ्ग्य अर्थ को व्यक्त करने वाले शब्द-स्वरूप काव्य को ध्वनि कहा )।

( ध्व० —न चैवंविधस्य ध्वनेर्वक्ष्यमाणप्रभेदतद्भेदसङ्कलनया महाविषयस्य यत्प्रकाशनं तदप्रसिद्धालङ्कारविशेषमात्रप्रतिपादनेन तुल्यमिति तद्भावितचेतसां युक्त एव संरम्भः। न च तेषु कथञ्चिदीर्ष्यया कलुषितशेमुषीकत्वमाविष्करणीयम्। तदेवं ध्वनेस्तावदभाववादिनः प्रत्युक्ताः।

( दी० शि० )—एवंविधस्येदृशस्य वक्ष्यमाणा ये प्रभेदा अविवक्षितवाच्यादयः, येच तद्भेदा अर्थान्तरसंक्रमितवाच्यादयश्च, तेषां सङ्कलनया गणनया महाविषयस्य महाविस्तारस्य महाव्यापकस्य वा ध्वनेर्यत् प्रकाशनं स्वरूपनिरूपणं तत् केवलं कस्यचिद् अप्रसिद्धस्य अलङ्कारविशेषस्य प्रतिपादनेन तुल्यमिति ( यद् अभाववादिभिः आक्षिप्तमित्यर्थः ) तेन तस्मिन् ध्वनिरूपे भावितं प्रणिहितं चेतो येषां तेषां ध्वनिवादिनामित्यर्थः युक्तः समीचीन एव संरम्भः कोपः। अतस्तान् ( ध्वनिवादिनः ) प्रति कथमपि ईर्ष्यया कलुषितशेमुषीकत्वं दूषितमतित्वम् अभाववादिभिर्नाविष्करणीयं न प्रकाशनीयम् क्व महाविषयो ध्वनिः क्वच स्वल्पिष्ठः क्षोदिष्ठोऽणिष्ठोवा कश्चिदलङ्कारः—नहि मेरुसर्षपयोरैक्यं साम्यं वाऽबालिशेन स्वीक्रियते। एवमुक्तरीत्या ध्वनेरभाववादिनः प्रत्युक्ताः ध्वनिं प्रति तेषामाक्षेपाः सम्यक् प्रत्याख्याता इत्यर्थः॥

( अनु० )—इस प्रकार वक्ष्यमाण ( अर्थान्तरसंक्रमितवाच्य आदि ) प्रभेदों तथा तद्भेदों की संकलना से जो महाविस्तृत या महाव्यापक है, उस ध्वनि का स्वरूप-निरूपण किसी एक अप्रसिद्ध अलङ्कारविशेष के प्रतिपादन के तुल्य है, इस आक्षेप से, जिनका चित्त ध्वनि के स्वरूप के प्रति भावित प्रणिहित है, उन ध्वनिसमर्थकों को रोष होना समीचीन ही है। अतः उन ( ध्वनिवादियों ) के प्रति अपनी ईर्ष्याकलुषित बुद्धि का प्रकाशन न करना चाहिए ( अर्थात् कहाँ महिष्ठ ध्वनि और कहाँ यह स्वल्पिष्ठ कोई अलङ्कार। कोई भी समझदार सुमेरु और सरसों के दाने की एकता नहीं मान सकता है )। तो इस प्रकार ध्वनि के अभाववादियों को उत्तर दे दिया।

( ध्व० )—अस्ति ध्वनिः। स चाविवक्षितवाच्यो विवक्षितान्यपरवाच्यश्चेति द्विविधः सामान्येन। तत्राद्यस्योदाहरणम्

सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः।
शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम्॥

द्वितीयस्यापि—

शिखरिणि क्वनु नाम कियच्चिरं किमभिधानमसावकरोत्तपः।
सुमुखि येन तवाधरपाटलं, दशति बिम्बफलं शुकशावकः॥१३॥

( दी० शि० )—अभाववद प्रत्याख्यानस्यैष फलनिष्कर्षः अस्ति ध्वनिरिति ध्वनेरस्तित्वं साधु साधितम्, अभावश्च तस्य सम्यक् प्रत्याख्यात इत्यर्थः।

स च काव्यविशेषरूपोध्वनिः सामान्येन ( न तु वक्ष्यमाणविशेषनिरूपणप्रकारेणेत्यर्थः ) वक्ष्यमाणविशेपभेदानां मूलभूतेनेति यावत्, द्विविधः—अविवक्षितवाच्यो लक्षणामूलव्यञ्जनासहितः, विवक्षितान्यपरवाच्योऽभिधामूलव्यञ्जनासहितश्चेति। तत्र आद्यस्य लक्षणामूलस्य अविवक्षितवाच्यस्य उदाहरणम्—सुवर्णेत्यादि—

"यः शूरः, यः कृतविद्यः अधीतविद्यः यश्च सेवितुं जानाति सेवाकर्मणि कुशलः, ते त्रयः पुरुषाः सुवर्णं धनमित्यर्थः पुष्पं यस्यास्तां पृथिवीं चिन्वन्ति—चिञो द्विकर्मकत्वात् पृथिव्या अपि कर्मत्वम्—पृथिव्या धनं संगृह्णन्तीत्यर्थः।"

अत्र शूरत्वाधीतविद्यत्वसेवाभिज्ञत्वगुणत्रयान्यतमयुक्ताः पुरुषाः सुलभसमृद्धिसम्भारभाजनं भवन्तीत्यर्थो लक्षणया प्रतिपाद्यते शूरकृतविद्यसेवकानां प्रकर्षश्चव्यञ्जनया गम्यते इति लक्षणामूलव्यञ्जनासहितो ध्वनिरयं वाच्यस्यात्राविवक्षितत्वात्।

द्वितीयस्य विवक्षितान्यपरवाच्यस्योदाहरणं च—शिखरिणीत्यादि—हे सुमुखि सुवदने, असावचिन्त्यभाग्यमहिमा शुकशावकः शुक इत्यर्थः जात्या तुच्छोऽपि ईदृशभाग्यानर्होऽपीति द्योतयितुं शावकशब्दः ( यथानैषधे विनयं द्योतयितुं—"जीवितावधि किमप्यधिकं वा यन्मनीषितमितो नरडिम्भात् ( नै० ५।९७ ) इत्यादौ नरादित्यर्थे नरडिम्भादितिप्रयोगः ) क्व कस्मिन् नु नाम शिखरिणि पर्वते कियच्चिरं कियत् कालं किमभिधानं किं नामकं तपः अकरोत्—येन हेतुना तव अधरवत् पाटलं पाटलवर्णं बिम्बस्य फलं दशति आस्वादयतीत्यर्थः। ( नहि श्रीपर्वतादयः शिखरिणः, दिव्यकल्पसहस्रादिकालः, पञ्चाग्निप्रभृतीनि तपांसि चैवंविधोत्तमफलजनकानि भवन्ति। ) तवेति भिन्नं पदम्, तेन तस्य प्राधान्यं, समासे तूपसर्जनीभूतं स्यात्।

अत्र अनुरागिणः प्रच्छन्नस्वाभिप्रायख्यापनवैदग्ध्यचाटुविरचनात्मकं व्यङ्ग्यम् इति अभिधामूलव्यञ्जनासहितोऽयं ध्वनिः वाच्यस्यात्रान्यपरत्वेन विवक्षितत्वात्।

( अनु० )—( अतः ) ध्वनि है। और वह ( काव्यविशेषरूप ) ध्वनि सामान्यतया दो प्रकार का है—अविवक्षितवाच्य तथा विवक्षितान्यपरवाच्य। उनमें प्रथम अर्थात् अविवक्षितवाच्य का उदाहरण—

"शूर, अधीतविद्य तथा सेवाभिज्ञ पुरुष सोना फूली हुई पृथ्वी ( रूपी लता ) को चुनते हैं।"—( अर्थात् पृथ्वी पर सोना बटोरते हैं )।

( 'यहाँ वे सुलभसमृद्धिसंभारभाजन होते हैं' यह अर्थ लक्षणा से तथा वे पुरुष प्रकृष्ट होते हैं यह अर्थ व्यञ्जना से निकलता है। अतः यह लक्षणामूलव्यञ्जनासहित ध्वनिकाव्य है। )

और द्वितीय अर्थात् विवक्षितान्यपरवाच्य का भी उदाहरण—

"हे सुमुखि, इस तोते के बच्चे ( तोते ) ने किस पर्वत पर, कितनी देर तक,

कौन-सा तप किया था कि यह तुम्हारे अधर के समान गुलाबी इस बिम्बफल का आस्वादन कर रहा है।"

( यहाँ प्रेमी का प्रच्छन्नस्वाभिप्रायप्रकाशनपूर्वक कुशलता से चाटुवचनरूप व्यङ्ग्य हो रहा है—अतः यह अभिधामूल व्यञ्जनासहित ध्वनिकाव्य है। )

ध्व०—यदप्युक्तं भक्तिर्ध्वनिरिति, तत्प्रतिसमाधीयते—

भक्त्या बिभर्ति नैकत्वंरूपभेदादयं ध्वनिः।

अयमुक्तप्रकारो ध्वनिर्भक्त्या नैकत्वं बिभर्ति भिन्नरूपत्वात्। वाच्यव्यतिरिक्तस्यार्थस्य वाच्यवाचकाभ्यां तात्पर्येण प्रकाशनं यत्र व्यङ्ग्यप्राधान्ये स ध्वनिः। उपचारमात्रं तु भक्तिः।

( दी० शि० )—साम्प्रतं ध्वनेर्भाक्तत्वं निराकर्तुमुपक्रमते— यदप्युक्तमित्यादि —यत् प्रथमकारिकायां 'भाक्तमाहुस्तमन्ये', तद्वृत्तौ च 'ध्वनिसंज्ञितं काव्यात्मानं गुणवृत्तिरित्याहुरिति' उक्तं तत् प्रतिसमाधीयते निराक्रियते। अत्र प्रथमं तयोरेकत्वं खण्डयति— "अयं पूर्वोक्तलक्षणो ध्वनिर्भक्त्या लक्षणया एकत्वम् एकरूपतां न बिभर्ति न धारयति भिन्नरूपत्वात्।"

रूपभेदमेव दर्शयति—यत्रकाव्ये वाच्यवाचकौ वाच्यव्यतिरिक्तस्यार्थस्य प्रयोजनत्वेन द्योतनं कुरुतः तत् प्रयोजनरूपव्यङ्ग्यप्रधानं काव्यं ध्वनिर्भवति, भक्तिर्लक्षणा तु पुनः उपचारमात्रं भवति'—यदिदम् उपचरणमतिशयितः शब्दस्य मुख्यार्थादन्यस्मिन्नर्थे व्यवहारः प्रयोगः सा भक्तिः। ( अत्र उपचारशब्दो लक्षणासामान्यवाचकः, न तु केवलसादृश्यमूलगौणलक्षणावाचकः। )

( अनु० )–अब ध्वनि की भाक्तता का निराकरण करने के लिए उपक्रम करते हैं—

"यह पूर्वोक्त-लक्षण ध्वनि भक्ति अर्थात् लक्षणा के साथ ऐक्य नहीं पाता, क्योंकि यह भिन्न रूपवाला है।"

जिस काव्य में वाच्य अर्थ एवं वाचक शब्द वाच्य से भिन्न अर्थ का प्रयोजन रूप से द्योतन करते हैं, वह ( प्रयोजनरूप व्यङ्ग्य अर्थ की प्रधानता वाला ) काव्य ध्वनि कहलाता है। और भक्ति तो मुख्यार्थ से इतर अर्थ का प्रतिपादनमात्र है। ( यहाँ उपचार शब्द लक्षणा सामान्य का वाचक है न कि केवल सादृश्यमूला लक्षणा का। )

( ध्व० )—मा चैतत्स्याद् भक्तिर्लक्षणं ध्वनेरित्याह—

अतिव्याप्तेरथाव्याप्तेर्नचासौ लक्ष्यते तया।१४।

नैव भक्त्या ध्वनिर्लक्ष्यते। कथम्? अतिव्याप्तेरव्याप्तेश्च। तत्रातिव्याप्तिर्ध्वनिव्यतिरिक्तेऽपि विषये भक्तेः सम्भवात्। यत्रहि व्यङ्ग्यकृतं महत् सौष्ठवं नास्ति तत्राप्युपचरितशब्दवृत्त्या प्रसिद्ध्यनुरोधप्रवर्तितव्यवहाराः कवयो दृश्यन्ते। यथा—

परिम्लानं पीनस्तनजघनसङ्गादुभयत-
स्तनोर्मध्यस्यान्तः परिमिलनमप्राप्य हरितम् ।
इदं व्यस्तन्यासं श्लथभुजलताक्षेपवलनैः
कृशाङ्ग्याः सन्तापं वदति बिसिनीपत्रशयनम् ॥

तथा—

चुम्बिज्जइ असहुत्तं अवरुधिज्जइ सहस्सहुत्तम्मि ।
विरमिअ पुणो रमिज्जइ पिओ जणो णत्थि पुनरुत्तम् ॥
( चुम्ब्यते शतकृत्वोऽवरुध्यते सहस्रकृत्वः ।
विरम्य पुना रम्यते प्रियो जनो नास्ति पुनरुक्तम् ॥ इतिच्छाया )

तथा—कुविआओ पसन्नाओ ओरुण्णमुहीओ विहसमाणाओ ।
जह गहिओ तह हिअअं हरन्ति उच्छिन्तमहिलाओ ।
( कुपिताः प्रसन्ना अवरुदितवदना विहसन्त्यः ।
यथा गृहीतास्तथा हृदयं हरन्ति स्वैरिण्यो महिलाः ॥ इतिच्छाया )

तथा—अज्जाए पहारो णवलदाए दिण्णो पिएण थणवट्टे ।
मिउओ वि दूसहो व्विअ जाओ हिअए सवत्तीणम् ॥
( भार्यायाः प्रहारो नवलतया दत्तः प्रियेण स्तनपृष्ठे ।
मृदुकोऽपि दुस्सह इव जातो हृदये सपत्नीनाम् ॥ इतिच्छाया )

तथा—

परार्थे यः पीडामनुभवति भङ्गेऽपि मधुरो
यदीयः सर्वेषामिह खलु विकारोऽप्यभिमतः ।
न सम्प्राप्तो वृद्धिं यदि स भृशमक्षेत्रपतितः
किमिक्षोर्दोषोऽसौ न पुनरगुणाया मरुभुवः ॥

इत्यत्रेक्षुपक्षेऽनुभवतिशब्दः । न चैवंविधः कदाचिदपि ध्वनेर्विषयः ।

( दी० शि० )—भक्तिर्लक्षणा ध्वनेः पूर्वोक्तकाव्यविशेषस्य लक्षणमिति चैतदपि मा स्यात् । अतिव्याप्तेरव्याप्तेश्च दोषादसौ ध्वनिस्तया भक्त्या न लक्ष्यते । तत्र लक्षणस्यातिव्याप्तिरित्थं स्याद् यद् ध्वनिव्यतिरिक्तेऽपि विषये भक्तेर्लक्षणायाः सत्त्वं दृश्यते—तथाहि यत्र व्यङ्ग्यकृतं महदधिकं सौष्ठवं नास्ति प्रयोजनभूतस्य व्यङ्ग्यस्यागूढत्वेनानादरणीयत्वात्, तत्रापि उपचरिताऽऽरोपिता या शब्दवृत्तिर्लक्षणा तया प्रसिद्धेः परम्पराया अनुरोधेन प्रवर्तितोव्यवहारो येषां लक्षणयैव शब्दान् व्यवहरन्त इत्यर्थः व्यङ्ग्यसौष्ठवमनपेक्ष्यापि लाक्षणिकान् शब्दान् प्रयुञ्जाना इति यावत् कवयो दृश्यन्ते—यथा—परिम्लानमित्यादि—

"पीनस्य स्तनजघनस्य सङ्गात् सम्पर्कात् उभयतः स्थानद्वयेऽपिपरिम्लानमतिमृदितम् तथा तनोर्मध्यस्य क्षीणकटिप्रदेशस्य अन्तर्मध्ये परिमिलनं संसर्गमप्राप्य हरितं हरिद्वर्ण-

मेव स्थितम्, तथा च श्लथयोर्भुजलतयोराक्षेपेण इतस्ततो वलनानि लुण्ठनानि तैर्व्यस्तो विपर्यस्तोन्यासो रचना यस्य तद् इदं बिसिनीपत्रशयनं नलिनीदलतल्पं कृशाङ्ग्याः तन्वङ्ग्याः सन्तापं विरहज्वरजनितं तापं वदति स्फुटं सूचयति।"

अत्र वदतीति पदम् अचेतनस्य व्यक्तवागुच्चारणसामर्थ्यविरहाद् वाधितमुख्यार्थं सत् सूचकत्वं लक्षयति तत्प्रयोजनं च स्फुटीकरणप्रतिपत्तिः। तत् स्फुटीकरणरूपं प्रयोजनं यदि स्वशब्देनोच्येत तत् किमचारुत्वं स्याद् व्यङ्ग्यतया वर्णने वा किं चारुत्वमधिकं जातम्। व्यङ्ग्यकृतेऽनन्यसाध्ये चारुत्वे एव हि ध्वनिर्भवति नान्यथा—यथा च वक्ष्यति स्वयं ध्वनिकार एव—

"उक्त्यन्तरेणाशक्यं यत्तच्चारुत्वं प्रकाशयन्।
शब्दो व्यञ्जकतां बिभ्रद् ध्वन्युक्तेर्विषयीभवेत्॥ इति॥

तथा—द्वितीयमुदाहरणम्—यथा चुम्बिज्जई इत्यादि—प्रियोजनः शतकृत्वः शतवारान् अगणितवारान् चुम्ब्यते स्वप्रियेणजनेनेतिशेषः, सहस्रकृत्वः सहस्रवारान् असंख्यवारान् (शतसहस्रादिशब्दा असंख्यतां द्योतयन्ति) अवरुद्धयते उपगूह्यते, विरम्य विश्रम्य पुनर्भूयोपि रम्यते। (प्रियोजनः) पुनरुक्तं न भवति पिष्टपेषणवदनुपादेयो न भवतीत्यर्थः।

अत्र 'पुनरुक्तम्' इति पदे अनुपादेयत्वं लक्ष्यते, किन्तु प्रयोजनं तत्र किमपि नाभ्यर्हितम्।

तथा-तृतीयम् उदाहरणं यथा—कुविआओ इत्यादि—स्वैरिण्यः पुंश्चल्यो महिलाः कामिन्यः कुपिताः प्रसन्नाः, अवरुदितमुख्यो रुदत्यो, विहसन्त्यो वा यथैव यद्रूपा एव गृहीता दृष्टा ज्ञाता इन्द्रियविषयीकृता वा तथा तद्रूपा एव हृदयं हरन्ति वशीकुर्वन्ति।

अत्रग्रहणेन इन्द्रियगोचरीकरणं लक्ष्यते, हरन्तीति हरणेन च वशीकरणम्। अनयोर्लक्षणयोर्न किमपि विशिष्टं प्रयोजनं व्यङ्ग्यम् इति यदि लक्ष्यार्थो वाच्यरूपेण स्ववाचकशब्देनाभिधीयेत तदापि न कापि अचारुता स्यात्।

तथा–चतुर्थमुदाहरणं यथा—अज्जाए इत्यादि—भार्यायाः प्रेयस्याः स्तनपृष्ठे कुचोपरि प्रियेण नवलतया मृदुकः कोमलोऽपि दत्तः कृतः प्रहारः आघातः सपत्नीनां हृदये दुस्सह इव जातः।

अत्र दत्त इति कृत इत्यर्थे लक्षणा न किञ्चिद् रमणीयं प्रयोजनम् अपेक्ष्य प्रवृत्ता अपितु प्रसिद्धयनुरोधादेव। तथैव च पञ्चममुदाहरणं यथा—परार्थ इत्यादि—यो भङ्गे छेदे पराभवेऽपि च मधुरः मधुरस्वादः मधुरस्वभावश्च परार्थं परप्रयोजने परोपकारे च पीडां यन्त्रमर्दनं क्लेशं चानुभवति प्राप्नोति सहते। यदीयोविकारो गुडादिरूपः मनोविकाररूपश्च इह सर्वेषां जनानाम् अभिमतः प्रियोभवति। स इक्षुः सत्पुरुषश्च अक्षेत्रपतितः कुत्सितभूमावुप्तः, कुस्थानेस्थितश्च यदि वृद्धिं पुष्टिमुन्नतिं च न सम्प्राप्तः तर्हि अयं

किमिक्षोः सत्पुरुषस्य च दोषः अगुणाया गुणरहिताया मरुभुवः मरुभूमेः कुस्थानस्य च पुनर्नदोषः—तदीय एवदोष इति काक्वा ज्ञाप्यते ।

अत्र पीडामनुभवति इत्यस्य इक्षुपक्षे मर्दंत इत्यर्थे लक्षणा-प्रयोजनं यत्किञ्चित् तदपि नादरास्पदम् ।

यद्यपि एवंविधेषु स्थलेषु प्रयोजनवत्या एव लक्षणायाः प्रयोगः किन्तु तत्र व्यङ्गच-भूतस्य प्रयोजनस्योपेक्षणीयत्वेनाचारुत्वान्नध्वनित्वम् । कदाचिदपि एवंविधं लक्षणास्थलं ध्वनेर्विषयो न भवति ।

( अनु० )—और यह भी नहीं हो सकता कि भक्ति ध्वनि का लक्षण हो—अब यह बताते हैं—"अतिव्याप्ति तथा अव्याप्ति दोष के कारण यह ध्वनि उस भक्ति के द्वारा लक्षित नहीं की जा सकती—उसमें भी लक्षण की अतिव्याप्ति इस प्रकार सम्भव है कि ध्वनि से व्यतिरिक्त विषय में भी भक्ति ( लक्षणा ) की सत्ता दिखाई पड़ती है—जैसे कि जहाँ व्यङ्ग्यार्थकृत अधिक सौष्ठव नहीं होता वहाँ भी प्रसिद्धिवश लक्षणावृत्ति से ही शब्दव्यवहार करते कविजन देखे जाते हैं—

जैसे—

"दोनों ओर पीनस्तन एवं जघन के सम्पर्क से अधिक मुर्झाया हुआ, मध्यभाग में सम्पर्क न प्राप्त करने के कारण हरित, शिथिल भुजलताओं के फैलाने एवं लुढ़कने से अस्त-व्यस्त कमलिनी के पत्तों की यह सेज ( बिस्तर ) कृशाङ्गी (विरह-व्यथिता सुन्दरी) का सन्ताप बता रही है ।"

( यहाँ 'वदति' यह पद अचेतन के व्यक्तवाणी बोलने के असामर्थ्य के कारण बाधितमुख्यार्थ होकर स्फुटित करती है या सूचित करती है यह अर्थ लक्षित करता है, जिसका 'स्फुटीकरण ज्ञान' रूप व्यङ्ग्य कोई विशिष्ट रमणीय प्रयोजन नहीं । उस अर्थ को वाचक शब्द द्वारा कहने पर भी कोई अन्तर न आएगा । अतः यह 'वदति' ध्वनि नहीं कहलाएगा । )

"प्रियजन सौ बार चूमा जाता है, हजार बार आलिङ्गित किया जाता है और रुककर पुनः रमण किया जाता है, फिर भी वह ( प्रियजन ) पुनरुक्त नहीं होता ।"

( यहाँ 'पुनरुक्त' पद में लक्षणा है—क्योंकि प्रियजन कोई वचनरूप तो है नहीं—अतः लक्ष्यार्थ होगा 'अनुपादेय'; जिसका कोई अभ्यर्हित प्रयोजन नहीं । )

उसी प्रकार—

"कुपित, प्रसन्न, रुआँसी, विहँसती चाहे जिस भी रूप में पकड़ी गई मनचली औरतें मन हर लेती हैं ।"

( यहाँ 'गृहीताः' से 'उपयोग की गई' तथा 'हरन्ति' से 'वश में कर लेती हैं' अर्थ लक्षित होते हैं । किन्तु लक्षणाओं का कोई विशिष्ट प्रयोजन व्यङ्ग्य नहीं है । यदि

ये ही लक्ष्यार्थ शब्दान्तरों द्वारा वाच्यरूप में कहे जायें तो कोइ अचारुता न होगी )।

उसी प्रकार—

"प्रिय ने भार्या के स्तन पर नवलता से प्रहार किया, जो कोमल होते हुए भी सौतों के हृदय में दुस्सह हो गया।"

( यहाँ 'दत्तः' का 'सफल किया गया' यह लक्षणा से लक्षित होता है। यहाँ कोई रमणीय प्रयोजन व्यङ्ग्य नहीं है। )

और उसी प्रकार—

"जो दूसरों के लिए पीडा का अनुभव करता है, टूट जाने पर भी मधुर बना रहता है, जिसका विकार भी सभी को अच्छा लगता है, वह ईख यदि ऊसर भूमि में पड़कर न बढ़ा तो क्या यह गन्ने का दोष है गुणहीन मरुभूमि का नहीं ?"

( यहाँ गन्ना पक्ष में यद्यपि 'पीडामनुभवति' का पेरा जाता है, यह अर्थ लक्षित होता है, किन्तु इसका व्यङ्ग्य कोई अभ्यर्हित नहीं—अतः यह ध्वनि नहीं है। )

( यद्यपि ऐसे स्थलों में प्रयोजनवती ही लक्षणा का प्रयोग हुआ है, किन्तु वहाँ व्यङ्ग्यरूप प्रयोजन के उपेक्षणीय होने के कारण उस ( प्रयोजन में चारुता नहीं है। अतः वहाँ ध्वनित्व नहीं है। ) ऐसी लक्षणा के स्थल कभी ध्वनि के विषय नहीं होते।

( ध्व० )—यतः—

उक्त्यन्तरेणाशक्यं यत्तच्चारुत्वं प्रकाशयन्।
शब्दो व्यञ्जकतां बिभ्रद्ध्वन्युक्तेर्विषयी भवेत् ॥१५॥

अत्र चोदाहृते विषये नोक्त्यन्तराशक्यचारुत्वव्यक्तिहेतुः शब्दः।

( दी० शि० )—तत्रहेतुमाह—यतो हि अन्या उक्तिः वचनम् उक्त्यन्तरं शब्दान्तरं तेन प्रकाशयितुम् अशक्यं यच्चारुत्वं चमत्कारः, तत् प्रकाशयन् शब्दो व्यञ्जकतां बिभ्रद् व्यञ्जकः सन् ध्वनिरित्युक्तेर्व्यपदेशस्य विषयीभवेद् ध्वनिशब्दभाग् भवति ध्वनिरित्युच्यत इत्यर्थः। व्यञ्जकेन प्रतिपादिते ह्यर्थे यादृक् चमत्कारः वाचकेन लाक्षणिकेन वा प्रतिपादिते तस्मिन्नेवार्थे न तादृक् चमत्कार इत्यर्थः।

अत्र चोदाहृते विषये पूर्वोक्तेषूदाहरणेष्वित्यर्थः। शब्दः ते ते लाक्षणिकाः शब्दाः न तथाविधं चारुत्वं व्यञ्जन्ति यथा उक्त्यन्तरैः शब्दान्तरैः प्रतिपादयितुयशक्यं स्यात्।१५।

( अनु० )—क्योंकि—

शब्दान्तर द्वारा जो रमणीयता प्रकाशित न की जा सके उसे प्रकाशित करता हुआ व्यञ्जक शब्द ध्वनि-पद-वाच्य होता है।

और इन पूर्वोक्त उदाहरणों में प्रयुक्त शब्द ( वे लाक्षणिक शब्द ) ऐसी रमणीयता को प्रकाशित करने के निमित्त नहीं बनते जो शब्दान्तर द्वारा न की जा सके।१५।

( ध्व० )--किञ्च—

रूढा ये विषयेऽन्यत्र शब्दाः स्वविषयादपि ।
लावण्याद्याः प्रयुक्तास्ते न भवन्ति पदं ध्वनेः ॥१६॥

तेषु चोपचरितशब्दवृत्तिरस्तीति । तथाविधे च विषये क्वचित् सम्भवन्नपि ध्वनिव्यवहारः प्रकारान्तरेण प्रवर्तते । न तथाविधशब्दमुखेन ।

( दी० शि० )—एवं प्रयोजनवतीष्वपि लक्षणासु यदि व्यङ्ग्यं प्रयोजनं नादरास्पदं भवति तदा नास्ति ध्वनिः किं पुनः निरूढासु लक्षणासु यत्र हि व्यङ्ग्यार्थरूपस्य प्रयोजनस्य सत्तैव नास्तीत्याह—किञ्चेत्यादि—

लावण्याद्याः आद्यग्रहणात् अनुलोमप्रतिलोमकुशलप्रभृतीनामसंख्यानां ग्रहणम्, ये शब्दाः स्वविषयात् स्वमुख्यार्थाद् अन्यत्र अर्थे रूढाः प्रतिपादकत्वेन स्थिताः, रूढत्वादेव प्रयोजनसान्निध्यापेक्षणशून्याः, ते काव्येषु प्रयुक्ता अपि ध्वनेः पदं न भवन्ति, न तेषु ध्वनि व्यवहारः । न च तत्र प्रयोजनं किञ्चिदुद्दिश्य लक्षणा प्रवृत्तेति न तद्विषयो ध्वनिव्यवहारः ।

तेषु लावण्यादिषु निरुढलाक्षणिकेषु शब्देषु च उपचरिता आरोपिता शब्दवृत्तिः लक्षणावृत्तिः अस्ति एव । यदि क्वचित् तथाविधेषु निरूढलाक्षणिकशब्देषु प्रयुक्तेष्वपि ध्वनिव्यवहारः सम्भवति तदा स व्यवहारः प्रकारान्तरेण तत्र क्वचित् विभावानुभावादि-रूपव्यञ्जकत्वस्य सम्भवादित्यर्थः न तूपचरितलावण्यादिशब्दप्रयोगाद् ।१६।

( अनु० )—जो 'लावण्य' आदि शब्द अपने और भी, ( लवण रस से युक्तत्वरूप ) विषय ( मुख्य अर्थ ) से अन्यत्र ( हृद्यत्वादि रूप ) अर्थ में रूढ़ हैं, वे भी ( काव्य में ) प्रयुक्त होने पर ध्वनि के विषय नहीं बनते ।"

और उन ( निरूढलाक्षणिक शब्दों ) में आरोपित शब्द-वृत्ति लक्षणा तो है ही । यदि कहीं उस प्रकार के निरूढलाक्षणिक शब्दों के प्रयुक्त होने पर ध्वनि व्यवहार किया भी जाता है तो वह व्यवहार प्रकारान्तर से होता है—( अर्थात् उसमें कहीं प्रयुक्त व्यञ्जक शब्द के कारण ) न कि उस प्रकार के उपचरित ( लाक्षणिक लावण्यादि ) शब्दों के कारण ।

( ध्व० )—अपिच

मुख्यां वृत्तिं परित्यज्य गुणवृत्त्यार्थदर्शनम् ।
यदुद्दिश्य फलं तत्र शब्दो नैव स्खलद्गतिः ॥१७॥

तत्र हि चारुत्वातिशयविशिष्टार्थप्रकाशनलक्षणे प्रयोजने कर्तव्ये यदि शब्द-स्यामुख्यता तदा तस्य प्रयोगे दुष्टतैव स्यात् । न चैवम् ।

( दी० शि० )—शब्दप्रयोग-प्रयोजनभूतश्च व्यङ्ग्योर्थो न लक्षणया प्रतिपाद्यत इति ध्वनिलक्षणयोर्वैभिन्न्ये हेत्वन्तरं निर्दिशति-अपिचेत्यादि—

यद् ( व्यङ्ग्यार्थरूपं ) फलं शब्दप्रयोगप्रयोजनभूतमर्थम् उद्दिश्य बोधयितुमभिप्रेत्य• मुख्यां वृत्तिम् अभिधाव्यापारं परित्यज्य परिसमाप्य गुणवृत्त्या लक्षणया, अर्थस्य अमुख्यस्य दर्शनं बोधः, तत्र प्रयोजने बोधनीये स शब्दः स्खलद्गतिर्बोधनासमर्थो नैव भवतीतिशेषः।

तत्र तच्छब्दप्रयोगस्य प्रयोजनं हि चारुत्वातिशयविशिष्टस्यार्थस्य प्रकाशनम्। तस्मिन् क्रियमाणेऽपि यदि तस्यशब्दस्यामुख्यता गौणता बाधितमुख्यार्थता स्यात् तदा तादृशस्य शब्दस्य प्रयोग एव दुष्टता सदोषता स्यात्। न च तस्य प्रयोगे दुष्टता काचित्, यतः तस्मिन् शब्द उच्चारितमात्रे प्रयोजनरूपः सोऽर्थः खलु झटिति निर्बाधं प्रतीयते।१७।

अनु०—और भी—

जिस ( व्यङ्ग्यार्थरूप ) फल अर्थात् शब्द-प्रयोग-प्रयोजनभूत-अर्थ का प्रतिपादन करने के लिए अभिधा का परित्याग करके शब्द से लक्षणा द्वारा अमुख्य अर्थ का बोध किया जाता है, उस फलरूप अर्थ को बताने में वह शब्द स्खलद्गति अथवा असमर्थ नहीं होता।

वहाँ उस शब्द के प्रयोग का प्रयोजन है चारुत्वातिशयविशिष्ट अर्थ का प्रकाशन। अब उसमें भी यदि वह गौण या बाधितमुख्यार्थ हो जाय तब तो उस प्रकार के शब्द का प्रयोग ही सदोष माना जायगा। किन्तु ऐसा नहीं है ( अर्थात् उसके प्रयोग में कोई दोष नहीं, क्योंकि उस शब्द का उच्चारण होते ही प्रयोजन रूप वह अर्थ तुरत निर्बाध प्रतीत हो जाता है। )।१७।

ध्व०—तस्मात्—

वाचकत्वाश्रयेणैव गुणवृत्तिर्व्यवस्थिता।
व्यञ्जकत्वैकमूलस्य ध्वनेः स्याल्लक्षणं कथम् ॥१८॥

तस्मादन्योध्वनिरन्या च गुणवृत्तिः।

**दी० शि०**—उपसंहरति तस्मादित्यादि—

यतो गुणवृत्तिर्लक्षणा वाचकत्वाश्रयणैव अभिधाव्यापारमाश्रित्यैव अभिधाव्यापारानन्तर-मेव अभिधापुच्छभूतत्वाद् व्यवस्थिता, ततो हेतोः व्यञ्जकत्वं व्यञ्जनाव्यापार एव एकं केवलं मूलं यस्य तादृशस्य ध्वनेः व्यञ्जनाव्यापारमाश्रित्यैव व्यवस्थितस्य ध्वनिनामकाव्य-प्रकारविशेषस्य कथं लक्षणं स्यात्? क्व व्यञ्जनाश्रितं काव्यं ध्वनिर्नाम क्व चामुख्यार्थप्रति-पादिका आरोपितव्यापारमात्रम् अभिधापुच्छभूता वराकी लक्षणा? तस्माद् भिन्न-स्वरूपत्वाद् ध्वनिर्भिन्नो गुणवृत्तिश्च भिन्नेत्यर्थः।

( अनु० )—अतः—

लक्षणाव्यापार, जो वाचकत्व अर्थात् अभिधा व्यापार का आश्रय करके व्यवस्थित होता है, व्यञ्जकत्वैकमूल अर्थात् केवल व्यञ्जना का आश्रय लेने वाले ध्वनि ( नामक काव्य-विशेष ) का लक्षण कैसे हो सकता है? इसलिए ध्वनि दूसरी ( वस्तु ) है और गुणवृत्ति ( लक्षणा ) दूसरी।

( ध्व० )—अव्याप्तिरप्यस्य लक्षणस्य। नहि ध्वनिप्रभेदो विवक्षितान्यपरवाच्यलक्षणः अन्ये च बहवः प्रकारा भक्त्या व्याप्यन्ते। तस्माद् भक्तिरलक्षणम्।

( दी० शि० )—अस्य गुणवृत्तिरूपस्य ध्वनिलक्षणस्य अव्याप्तिरपि दोषोऽस्ति—नहि यत्र यत्र ध्वनिस्तत्र सर्वत्र गुणवृत्तिरपीति—( अविवक्षितवाच्येध्वनौ तु यद्यपि गुणवृत्तिरस्ति, तत्र लक्षणामूलाया एव व्यञ्जनावृत्तेः सत्त्वात् किन्तु ) विवक्षितान्यपरवाच्ये अभिधामूलव्यञ्जनासहिते ध्वनौ तद्भेदप्रभेदेषु च कथंकारं गुणवृत्तेः प्रवेशः—नहि ते ध्वनिप्रभेदा भक्त्या कथमपि व्याप्यन्ते स्पृश्यन्ते। तस्मादिति सामान्य उपसंहारः-अव्याप्त्यतिव्याप्तिदोषादित्यर्थः न भक्तिर्ध्वनेर्लक्षणमिति।

( अनु० )—इस ( गुणवृत्तिरूप ध्वनि के ) लक्षण में अव्याप्ति दोष भी है। विवक्षितान्यपरवाच्य—अर्थात् अभिधामूल व्यञ्जना व्यापार सहित—ध्वनि तथा उसके अन्य सभी प्रकार भक्ति ( लक्षणा ) से व्याप्त ( स्पृष्ट ) नहीं होते। अतः भक्ति ध्वनि का लक्षण नहीं है।

( ध्व० )—कस्यचिद्ध्वनिभेदस्य सा तु स्यादुपलक्षणम्।

सा पुनर्भक्तिर्वक्ष्यमाणप्रभेदमध्यादन्यतमस्य भेदस्य यदि नामोपलक्षणतया सम्भाव्येत; यदि च गुणवृत्त्यैव ध्वनिर्लक्ष्यत इत्युच्यते तदभिधाव्यापारेण तदितरोऽलङ्कारवर्गः समग्र एव लक्ष्यत इति प्रत्येकमलङ्काराणां लक्षणकरणवैयर्थ्यप्रसङ्गः।

( दी० शि० )—इत्थं भक्तेर्ध्वनितादात्म्यलक्षणत्वे निरस्य इदानीं तदुपलक्षणत्वमेव कथमपि स्वीकरोति—सा गुणवृत्तिः कस्यचिद् अविवक्षितवाच्यस्येत्यर्थः ( न तु सर्वस्य ) ध्वनिभेदस्य उपलक्षणं काक इव देवदत्तगृहस्य कादाचित्कबोधकारणं स्यात् सम्भाव्येतेत्यर्थः। एतदेव वृत्तौ विवृणोति-सा पुनरित्यादिना—वक्ष्यमाणध्वनिप्रभेदेषु अन्यतमस्य अविवक्षितवाच्यनाम्नो भेदस्य केवलम् उपलक्षणतया कादाचित्कतया न तु नित्यलक्षणरूपेण सम्भाव्येत। तथापि यदि ( दुराग्रहवशात् ) गुणवृत्तिः विवक्षितान्यपरवाच्यादिभेदोपभेदबृंहितस्य समग्रस्यापि ध्वनेर्लक्षणं स्यादिति मन्येत, तदा सर्वेषु वाच्यालङ्कारेषु अभिधाव्यापारस्यैव प्राधान्यात् अभिधायाश्च लक्षणे वैयाकरणमीमांसकैर्निरूपिते तदुपलक्षितः समस्त एव वाच्यालङ्कारसमुदायो लक्षणनिरूपित इति मन्यताम्, वाच्यालङ्काराणां प्रत्येकं लक्षणकरणं व्यर्थं पिष्टपेषणमिति स्वीक्रियताम्।

( अनु० )—'वह गुणवृत्ति ध्वनि के केवल किसी ( अविवक्षितवाच्यनामक ) भेद का उपलक्षण ( कादाचित्कबोधकारण ) मात्र हो सकती है।'

वक्ष्यमाणध्वनिप्रभेदों में अन्यतम ( अर्थात् अविवक्षितवाच्य नामक ) भेद का उपलक्षणमात्र वह गुणवृत्ति हो सकती है ( न कि नित्यलक्षण )। इतने पर भी यदि ( दुराग्रहवश ) कहें कि गुणवृत्ति ( लक्षणा ) से ही ध्वनि का लक्षण होता है तो ( सभी वाच्यालङ्कारों में अभिधाव्यापार की प्रधानता के कारण वैयाकरणों एवं मीमांसकों के द्वारा उस

अभिधा के लक्षण के निरूपित कर देने पर उस ) अभिधा से ( उपलक्षित ) समग्र वाच्यालङ्कारसमुदाय का लक्षण निरूपित कर दिया गया समझा जाना चाहिए—,और अलङ्कारों में प्रत्येक का लक्षण करना व्यर्थ हो जाता है।

( ध्व० )—किं च—

लक्षणेऽन्यैः कृते चास्य पक्षसंसिद्धिरेव नः ॥१९॥

कृतेऽपि वा पूर्वमेवान्यैर्ध्वनिलक्षणे पक्षसंसिद्धिरेव नः; यस्माद् ध्वनिरस्तीति नः पक्षः। स च प्रागेव संसिद्ध इत्ययत्नसम्पन्नसमीहितार्थाः संवृत्ताः स्मः।

( दी० शि० )—किं च यदि भक्तिर्ध्वनेरुपलक्षणभूता स्वीकृताऽपि स्यात् तथापि को दोषः? नास्माभिरपूर्वोन्मीलनं कृतं पूर्वोन्मीलितमेव सम्यङ् निरूपितमित्यभिप्रायेणाह—किंचेत्यादि—अन्यैर्ध्वनिवादीतरैर्भक्तिवादिभिरित्यर्थः अस्य ध्वनेर्लक्षणे पूर्वं कृते नः अस्माकं ध्वनिवादिनां पक्षस्य साध्यस्यैव ध्वनिसत्त्वस्यैवेत्यर्थः संसिद्धिः सम्यङ् निष्पत्तिः स्यादितिशेषः।

यदि चान्यैः प्रागेव ध्वनेर्लक्षणं निरूपितं तदाप्यस्माकमिष्टस्य संसिद्धिरेव, यतो ध्वनेः सत्त्वमेवास्माकं साध्यमिष्टं तच्च यदि पूर्वमेव साधितं तदा स्वप्रयत्नं विनैव वयं ध्वनि-वादिनः सम्पन्नेष्टार्थाः संजाताः।

( अनु० )—और यदि,

'अन्य लोगों ने इस ध्वनि का लक्षण पहले ही कर दिया है तो हम ध्वनिवादियों के पक्ष ( ध्वनिसत्तारूपसाध्य ) की ही सिद्धि हो जाती है।'

अन्यों द्वारा पहले ही ध्वनिलक्षण निरूपित होने पर तो हमारे पक्ष ( साध्य ) की ही सिद्धि होती है, क्योंकि ध्वनि की सत्ता ही हमारा सिषाधयिषित है। यदि वह पहिले ही सिद्ध कर दिया गया तो हम बिना स्वप्रयत्न के सिद्धार्थ हो गए।

( ध्व० )—येऽपि सहृदयसंवेद्यमनाख्येयमेव ध्वनेरात्मानमाम्नासिषुस्तेऽपि न परीक्ष्यवादिनः। यत उक्तया नीत्या वक्ष्यमाणया च ध्वनेः सामान्यविशेषलक्षणे प्रतिपादितेऽपि यद्यनाख्येयत्वं तत्सर्वेषामेववस्तूनां तत्प्रसक्तम्। यदि पुनर्ध्वनेरति-शयोक्त्यानया काव्यान्तरातिशायि तैः स्वरूपमाख्यायते तत्तेऽपि युक्ताभिधा-यिन एव।

इति श्रीराजानकानन्दवर्धनाचार्यविरचिते ध्वन्यालोके
प्रथम उद्योतः॥

( दी० शि० )—ये चापि लक्षणकरणाप्रगल्भमतयो ध्वनेरात्मानं तत्त्वं स्वभावं वैशिष्ट्यमिति यावत् केवलं सहृदयहृदयेनैव संवेद्यं लक्षणनिरूपणादिप्रकारैराख्यातुमनर्हम् अनिर्वचनीयमित्यर्थः आम्नासिषुः परम्परया अवोचन्, तेऽपि न परीक्ष्यवादिनः विचार्य-वादिनः यत उक्तया "यत्रार्थः शब्दोवेत्यादिरूपया नीत्या ध्वनेः सामान्यलक्षणं, वक्ष्यमाणया

अर्थान्तरे सङ्क्रमितमित्यादिरूपया द्वितीयोद्योते प्रतिपादयिष्यमाणया नीत्या च विशेषलक्षणे प्रतिपादितेऽपि यदि ध्वनेरनाख्येयत्वमनिर्वचनीयत्वमेव स्यात् तदा सर्वेषामेव प्रत्यक्षादि-प्रमाणसिद्धानां लौकिकानां शास्त्रीयाणां च वस्तूनां तदनाख्येयत्वं प्रसक्तमापन्नं स्यात् ।

यदि पुनस्तैरनया अनाख्येयतारूपयाऽतिशयोक्त्या ध्वनेः स्वरूपम् अन्यानि काव्यानि संस्कृतप्राकृतादिभाषानिबद्धानि गुणीभूतव्यङ्ग्यचित्रादिरूपाणीति काव्यान्तराणि तानि अतिशेत इत्येवंशीलम् आख्यायते तत् तेऽनाख्येयतावादिनोऽपि युक्ताभिधायिनः यथार्थ-वादिन एव ॥१९॥

इतिश्रीमदाचार्यचण्डिकाप्रसादविरचितायां दीपशिखायां ध्वनिविवृतौ प्रथम उद्योतः ॥

( अनु० )--और जिन ( लक्षणनिरूपण करने में अप्रगल्भ बुद्धिवालों ) ने ध्वनि की आत्मा ( स्वभाव या वैशिष्ट्य ) को केवल सहृदयहृदयसंवेद्य ( लक्षणनिरूपणादिप्रकार से व्याख्या के लिए अनर्ह ) परम्परा से कहा है, वे भी विचारपूर्वक कहनेवाले नहीं थे । क्योंकि उक्त नीति से सामान्य लक्षण तथा वक्ष्यमाण नीति से विशेष लक्षण के निरूपित कर देने पर भी यदि ध्वनि की अनिर्वचनीयता ही रह जाती है तो सभी प्रत्यक्षादि प्रमाणसिद्ध लौकिक एवं शास्त्रीय पदार्थों को भी वह ( अनिर्वचनीयता ) प्राप्त होती है । किन्तु यदि वे इस अनिर्वचनीयरूप अतिशयोक्ति द्वारा ध्वनि के स्वरूप को अन्य प्रकार के काव्यों से बढ़कर बताते हैं तो वे भी उचित ही कहते हैं ।१९।

इतिश्रीमदाचार्यचण्डिकाप्रसादविरचितेऽनुस्वानाख्ये हिन्दी-भाषानुवादे--

प्रथम उद्योतः ॥



परिशिष्ट १

# ध्वनिकार आनन्दवर्धन

"ध्वनिनातिगभीरेण काव्यतत्त्वनिवेशिना।
आनन्दवर्धनः कस्य नासीदानन्दवर्धनः॥"

—राजशेखर

संस्कृत साहित्यशास्त्र में युगप्रवर्तक ग्रन्थ ध्वन्यालोक काव्यालोक तथा सहृदयालोक नाम से भी आचार्यों द्वारा उल्लिखित हुआ है। साहित्यशास्त्र में इस ग्रन्थ का वही स्थान है जो व्याकरण-शास्त्र में पाणिनि की अष्टाध्यायी का तथा वेदान्त-दर्शन में बादरायण के ब्रह्मसूत्रों का। इस महान् ग्रन्थ में जिन सिद्धान्तों का प्रतिपादन किया गया है, उन्हीं का समर्थन, व्याख्यान एवं अनुसरण अभिनवगुप्त, मम्मट, हेमचन्द्र, विश्वनाथ तथा पण्डितराज जगन्नाथ आदि धुरीण साहित्यमनीषियों ने किया। इस ग्रन्थरत्न ने पूर्वप्रचलित गुण-रीति-अलङ्कार आदि काव्याङ्गों का समुचित मूल्याङ्कन कर काव्य में उनके स्थान की व्यवस्था दी तथा काव्य के वास्तविक सौन्दर्य को परखने की चिर सत्य दृष्टि दी। पण्डितराज जगन्नाथ के शब्दों में—"ध्वनिकृतामलङ्कारसरणिव्यवस्थापकत्वात्।"

ध्वन्यालोक में कुल चार उद्योत हैं तथा सम्पूर्ण ग्रन्थ में कारिका, वृत्ति एवं उदाहरण तीन भाग हैं। कुछ सङ्ग्रह, परिकर या संक्षेप श्लोक भी हैं जो वृत्ति के ही अन्तर्गत माने जाएँगे, क्यों कि वृत्ति में कही गई बातें ही कभी-कभी अन्त में पद्यबद्ध कर दी जाती हैं, जिससे मूल कारिका और विशद रूप से व्याख्यात हो जाती है—"परिकरार्थं कारिकार्थस्याधिकावापं कर्तुं श्लोकः परिकरश्लोकः।"—लोचन। यहाँ जिज्ञासा होती है, कि इन तीनों भागों का रचयिता एक ही व्यक्ति है, अथवा कारिका का कोई एक और वृत्ति तथा उदाहरण का कोई दूसरा? अर्वाचीन पुराविदों में म० म० डा० कुप्पूस्वामी शास्त्री, डा० ए० शङ्करन्, डा० शतकरी मुकर्जी, डा० के० सी० पाण्डेय तथा डा० के० कृष्णमूर्ति आदि विद्वानों ने कारिकाकार एवं वृत्तिकार को एक ही व्यक्ति माना है, किन्तु डा० बुह्लर, प्रो० जैकेबी, डा० कीथ, म० म० डा० पी० वी० काणे, डा० एस० के० दे, प्रो० एस० पी० भट्टाचार्य आदि धुरीणों ने दोनों को दो पृथक् व्यक्ति सिद्ध किया है। प्राचीन आचार्यों में ध्वन्यालोक के प्रसिद्ध टीकाकार अभिनवगुप्त ने, जो आनन्दवर्धन से करीब १५० वर्ष पश्चात् हुए, अपनी 'लोचन' नामक टीका में कारिकाकार एवं वृत्तिकार को पृथक्-पृथक् व्यक्ति बताया है। वे कारिका के रचयिता को कारिकाकार, कारिकाकृत्, अथवा मूलग्रन्थकृत् आदि कहते हैं, वृत्ति के रचयिता को वृत्तिकार, वृत्तिकृत्,

शास्त्रकार अथवा ग्रन्थकार आदि रूप से उल्लिखित करते हैं। यद्यपि अभिनव ने नाट्यशास्त्र की अपनी टीका 'भारती' में (तथा कहीं-कहीं लोचन में भी) कुछ ऐसे वाक्य कहे हैं, जिससे वे कारिका, वृत्ति दोनों के रचयिता को एक ही व्यक्ति मानते भी समझ पड़ते हैं, किन्तु उनकी लोचन की उक्तियाँ उनके इसी मत को निस्सन्दिग्ध रूप में प्रकट करती हैं कि वे दोनों को पृथक् व्यक्ति ही मानते हैं। व्यक्तिविवेककार महिमभट्ट ने जिन्होंने ध्वनिकार के ही वचनों का विवेचन किया है, कारिका और वृत्ति के कर्त्ता को एक ही व्यक्ति माना है। वैसे परवर्ती आचार्य प्रतीहारेन्दुराज, कुन्तक, महिमभट्ट, क्षेमेन्द्र, मम्मट, हेमचन्द्र, विश्वनाथ तथा जगन्नाथ आदि ने इस प्रश्न के प्रति अपनी कोई जागरूकता नहीं दिखाई है। वे केवल ध्वनिकार शब्द का प्रयोग करते हैं, जो कारिका तथा वृत्ति के रचयिता के लिए समान रूप से प्रयुक्त होता है।

इस प्रकार यह एक विवादास्पद विषय बन गया। किन्तु बहुत से विषय ध्वन्यालोक में ऐसे कहे गए हैं, जो केवल वृत्ति में हैं, कारिका में कहीं नहीं। उदाहरणार्थ— प्रथम उद्योत में ध्वनि के अभाववादियों का उल्लेख उत्तर कारिका में कहीं नहीं है। केवल (१३ वीं कारिका की) वृत्ति में है। फिर भक्तिवादियों को तो कारिका द्वारा उत्तर दिया गया है किन्तु अलक्षणीयतावाद को वृत्ति के ही मत्थे छोड़ दिया गया। और ऐसा तभी संगत माना जायगा जब दोनों का कर्त्ता एक ही हो। इसी तरह 'सहृदयमनःप्रीतये' की वृत्ति में 'सहृदयानामानन्दो मनसि लभतां प्रतिष्ठाम्' द्वारा अपने नाम 'आनन्द' का श्लेष द्वारा सङ्केत कर दिया है, जो दोनों का रचयिता ही कर सकता है। और अन्त में ध्वनितत्त्व की व्याकृति का श्रेय जिस प्रकार अपने प्रथित अभिधान का उल्लेख करते हुए आनन्दवर्धन लेते हैं उससे स्वतः सिद्ध हो जाता है कि वे दोनों के एक ही कर्त्ता हैं, नहीं हो इतनी विश्वस्तता के साथ आत्मोल्लेख न करते—

सत्काव्यतत्त्वनयवर्त्मचिरप्रसुप्तकल्पं मनस्सु परिपक्वधियां यदासीत्।
तद्व्याकरोत् सहृदयोदयलाभहेतोरानन्दवर्धन इति प्रथिताभिधानः॥

कुछ संस्करणों में तो वृत्ति में एक ऐसा भी श्लोक अन्त में मिलता है, जिसमें वृत्तिकार ने इस समस्त काव्य-विवेचन को स्वोपज्ञ ही बताया है:—

इति काव्यार्थविवेकोऽयं चेतश्चमत्कृतिविधायी।
सूरिभिरनुसृतसारैरस्मदुपज्ञो न विस्मार्यः।

अतः कारिका एवं वृत्ति के रचयिता को एक ही मानना अधिक उचित एवं तर्कसंगत प्रतीत होता है। अस्तु।

कल्हण ने अपनी राजतरङ्गिणी में आनन्दवर्धन को काश्मीर-नरेश अवन्तिवर्मा का समकालिक कहा है—

मुक्ताकणः शिवस्वामी कविरानन्दवर्धनः।
प्रथां रत्नाकरश्चागात्साम्राज्येऽवन्तिवर्मणः॥ (रा० त० ५।३४)

अवन्ति वर्मा का समय ८५५ से ८८३ ई० तक के बीच माना जाता है। आनन्दवर्धन ने उद्भट का उल्लेख किया है। अतः वे उद्भट के अर्थात् ८०० ई० के बाद ही हुए होंगे। और राजशेखर ने आनन्दवर्धन का उल्लेख किया है। अतः वे राजशेखर के अर्थात् ९०० ई० के पूर्व हुए होंगे। इस प्रकार आनन्दवर्धन का जीवनकाल करीब ८१० से ८८० ई० के बीच पड़ता है।

आनन्दवर्धन के, पिता का नाम नोण या नोणोपाध्याय था जैसा कि 'इण्डिया आफिस लाइब्रेरी' में सुरक्षित ध्वन्यालोक की पाण्डुलिपि के तृतीय उद्योत के अन्त में उल्लिखित है। अपने 'देवीशतक' में आनन्दवर्धन ने भी अपने को 'नोणसुत' कहा है :—

**देव्या स्वप्नोद्गमादिष्टदेवीशतकसंज्ञया।**
**देशितानुपमामाधादतो नोणसुतो नुतिम् ॥**

ध्वन्यालोक के अतिरिक्त आनन्दवर्धन ने अनेक और ग्रन्थ रचे। 'अर्जुनचरित', 'विषमबाणलीला' तथा 'देवीशतक' उनके काव्य थे। 'धर्मोत्तमाविवृति', धर्मकीर्ति के ग्रन्थ 'प्रमाणविनिश्चय' पर टीका थी। 'तत्त्वालोक' वेदान्तदर्शनविषयक ग्रन्थ था। 'देवीशतक' में आनन्दवर्धन की चित्र-काव्य-रचना-योग्यता का सुन्दर नमूना मिलता है। कविरूप में वे सब प्रकार की रचना करने की क्षमता रखते थे।

अपने ध्वन्यालोक के द्वारा आनन्दवर्धन ने काव्यरचना का सर्वस्व व्यङ्ग्य अर्थ तथा उसके व्यञ्जक शब्द एवं अर्थ का महत्त्व बताया। सहृदय जगत् का ध्वनिकाव्य से परिचय करवाया। ध्वनि के विरोधियों को उत्तर दिया। काव्य में व्यञ्जना वृत्ति की अनिवार्यता प्रमाणित की। गुण, रीति, अलङ्कार आदि का काव्य में उचित स्थान एवं मूल्य निर्धारित किया। रसावेश की व्यवस्था करते हुए इसके विरोधाविरोध का परिहार बताया। कवि-प्रतिभा के साथ ध्वनिरूप काव्य-रचना का अविनाभाव सम्बन्ध प्रमाणित किया। काव्यजगत् में नवीनता की सृष्टि ध्वनिमयी रचनाओं के द्वारा ही सम्भव बतायी। काव्यसमालोचना का नितान्त नूतन किन्तु सर्वथा सत्य मानदण्ड स्थिर किया।

आनन्दवर्धन उच्चकोटि के सहृदय, लब्धपरमार्थ दार्शनिक तथा ब्रह्मलीनधिषणावाले परम भक्त आचार्य थे। उनके इस एक श्लोक से उनके व्यक्तित्व की कुछ झांकी मिल सकती है :—

**या व्यापारवती रसान् रसयितुं काचित् कवीनां नवा**
**दृष्टिर्या परिनिष्ठितार्थविषयोन्मेषा च वैपश्चिती।**
**ते द्वे अप्यवलम्ब्य विश्वमनिशं निर्वर्णयन्तो वयं,**
**श्रान्ता नैव च लब्धमब्धिशयन त्वद्भक्तितुल्यं सुखम् ॥**

ध्वन्यालोक पर 'चन्द्रिका' तथा 'लोचन' दो प्राचीन टीकाएँ लिखी गईं। 'चन्द्रिका' के न तो रचयिता का कोई पता है, न वह टीका ही मिलती है। वह बहुत दिनों से विलुप्त हो गई है। केवल अभिनव तथा महिमभट्ट आदि आचार्यों के उल्लेख मात्र से

उसका कुछ परिचय मिलता है। अभिनव ने उसके रचयिता को अपना 'पूर्ववंश्य' तथा 'निजपूर्वजसगोत्रज' कहा है। भट्टनायक ने भी 'हृदयदर्पण' नामक एक टीका सी लिखी थी, जिसमें ध्वनिसिद्धान्तों का विरोध ही प्रतिपादित था। वह सम्भवतः महिमभट्ट के 'व्यक्तिविवेक' भी भाँति थी। अभिनवगुप्त की टीका 'लोचन' विद्वानों में सदा अति प्रसिद्ध रही है। वह सम्पूर्ण ध्वन्यालोक पर मिलती है। परवर्ती आचार्यों ने ध्वनिमार्ग को अभिनव के 'लोचन' से ही देखा। अतः प्रायः सभी आचार्यों के ऊपर 'लोचन' की छाप दिखाई पड़ती है। महिमभट्ट ने 'व्यक्तिविवेक' नामक प्रबन्ध द्वारा ध्वनिकार के ध्वनिलक्षण, ध्वनिभेदों एवं ध्वनि के उदाहरण को अनुमान में अन्तर्भूत करने का प्रयत्न किया है। उन्होंने संकल्प किया है कि अविवक्षितवाच्य, विवक्षितान्यपरवाच्यादि सभी प्रकार की ध्वनियों का (सर्वस्यैव ध्वनेः) वे अनुमान में अन्तर्भाव दिखायेंगे। किन्तु उनका विरोध सहृदयसमाज को मान्य न हुआ। काव्यार्थ-विवेचन में अनुमान की प्रतिष्ठा सम्भव न हो सकी। आधुनिक टीका आचार्य बदरीनाथ शर्मा की 'दीधिति' नाम से प्रचलित है। यह भी अत्यन्त प्रचलित टीका है। इधर हिन्दी तथा अंग्रेजी में भी ध्वन्यालोक के अनेक अनुवाद एवं टिप्पणियाँ निकली हैं। किन्तु प्रायः सर्वत्र 'लोचन' की ही प्रभुता छाई है। कोई मुक्त नहीं दिखाई पड़ता। यह दीपाशिखा उन सबसे पृथक् स्वतन्त्र है। इसमें ध्वन्यालोक की बात कही गई है, 'लोचन' की नहीं।



परिशिष्ट २

# ध्वनिविरोधी

आनन्दवर्धन ने ध्वनि के केवल तीन विरोधियों का उल्लेख किया है। वे हैं—१. अभाववादी या अलङ्कारवादी, २. भक्तिवादी तथा ३. अलक्षणीयतावादी। इन तीनों का ही विषय काव्यमीमांसा था। इन्हीं का उल्लेख ध्वनिकार ने प्रथम कारिका में किया है, और इन्हीं को मुंह तोड़ उत्तर तेरहवीं कारिका की वृत्ति से प्रारम्भ कर उद्योत के अन्त तक दिया है। मीमांसक, नैयायिक, वैयाकरण, सौगत आदि तो व्यञ्जना वृत्ति के विरोधी हैं—क्योंकि वृत्तियों का विवेचन करना उनका विषय (क्षेत्र) है। उनसे काव्यविवेचन से क्या प्रयोजन ? अतएव उनका उल्लेख ध्वनिकार ने तृतीय उद्योत में व्यञ्जना-वृत्ति-विवेचन के प्रसङ्ग में किया है। वे लोग ध्वनिविरोधी नहीं व्यञ्जनाविरोधी हैं। और इस प्रकार व्यङ्ग्यार्थ के विरोधी भी वे ही व्यञ्जना-विरोधी लोग होंगे। उन्हें ध्वनिविरोधी केवल परोक्ष रूप से, व्यञ्जनाविरोधी होने के नाते ही, कह सकते हैं—किन्तु आनन्दवर्धन ने उन्हें इस प्रकार ध्वनिविरोधी रूप से उल्लिखित नहीं किया है।

परिशिष्ट ३

# ध्वनि और कविप्रतिभा

ध्वनिरूप व्यञ्जक काव्यविशेष की रचना का कवि की प्रतिभाशक्ति के साथ सहज अविनाभाव सम्बन्ध है। यदि कवि में नवनवोन्मेषशालिनी प्रतिभाशक्ति है तो वह निश्चय ही ध्वनिकाव्य की ही रचना करेगा। व्यङ्ग्य अर्थरूपी हृद्य चमत्कार प्रकट करती हुई प्रतिभावान् कवि की भारती उसकी अलोक-सामान्य प्रतिभा को प्रमाणित करती है। ऐसा ही कवि महाकवि कहलाता है। अतएव ध्वनिशास्त्रनिर्माण के बहुत पूर्व से ही वाल्मीकि, व्यास, कालिदास प्रभृति प्रतिभाधनिक महाकवियों की प्रतिभा यह चमत्कार दिखाती चली आ रही है। उन्होंने ध्वनिशास्त्र कहाँ पढ़ा था? तभी तो आनन्दवर्धन कह उठते हैं—

**सरस्वती स्वादु तदर्थवस्तु निष्यन्दमाना महतां कवीनाम्।**
**अलोकसामान्यमभिव्यनक्ति परिस्फुरन्तं प्रतिभाविशेषम्॥ (ध्वनि १.६)**

ध्वनिकाव्य प्रतिभावान् कविप्रजापति की नैसर्गिकी वाङ्मयी सृष्टि है।



## परिशिष्ट ४

# श्लोकः श्लोकत्वमागतः

आनन्दवर्धन ने आदिकवि वाल्मीकि के शोक को, जो अपनी मारी गई सहचरी के विरह से कातर एक क्रौञ्चपक्षी के आक्रन्दन से उत्पन्न हुआ, श्लोक के रूप में परिणत हो जाना कहा है—"तथा चादिकवेर्वाल्मीकेः निहतसहचरीविरहकातरक्रौञ्चाक्रन्दजनितः शोक एव श्लोकतया परिणतः।" किन्तु वाल्मीकि-रामायण में तो नरक्रौञ्च मारा गया कहा गया है। और वहाँ मादा रोती कही गई है—

तं शोणितपरीताङ्गं चेष्टमानं महीतले।
दृष्ट्वा क्रौञ्ची रुरोदार्ता करुणं खे परिभ्रमा॥

तो इस प्रकार ध्वनिकार के कथन की सङ्गति कैसे लगे? इसका समाधान विद्वानों ने इस प्रकार दिया है। वाल्मीकि-रामायण के—

"मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम्॥"

इस आदि श्लोक का एक व्यङ्ग्य अर्थ भी है, जो रावण के प्रति घटित होता है। जिसमें, "हे रावण, क्रौञ्चमिथुन अर्थात् राम-सीता के जोड़े में से स्नेहमोहित एक सीतारूप का जो तुमने वध किया अर्थात् महाकष्ट दिया अतः तुम्हें अनन्त वर्षों तक प्रतिष्ठा, सम्मान अथवा लङ्कापुरी में स्थिति न मिले।" यह अर्थ व्यङ्ग्य निकलता है। आनन्दवर्धन ने, इसी व्यङ्ग्य अर्थ के प्रति अधिक आस्थावान् होने के कारण, उसके अनुसार 'निहतसहचरी' आदि लिखा है, अन्यथा ये भी निहतसहचर ही लिखते।

# प्रमुख संस्कृत प्रकाशन

| | | |
|---|---|---|
| भुशुण्डि रामायण (पूर्व खण्ड) | डॉ० भगवतीप्रसाद सिंह | १०.[illegible] |
| उत्तररामचरितम् | डॉ० रामअवध पाण्डेय | |
| संस्कृत भाषाविज्ञान एवं भाषाशास्त्र | डॉ० कपिलदेव द्विवेदी | ३०.[illegible] |
| प्रारम्भिक रचनानुवादकौमुदी | ,, ,, | ३.[illegible] |
| रचनानुवाद कौमुदी | ,, ,, | ७.५[illegible] |
| प्रौढ़-रचनानुवादकौमुदी | ,, ,, | २५.[illegible] |
| संस्कृत व्याकरण | ,, ,, | ३०.०० |
| अलङ्कारप्रस्थानविमर्शः | डॉ० लक्ष्मीनारायण सिंह | १०.०० |
| मुद्राराक्षसम् ( विशाखदत्त ) | डॉ० रमाशंकर त्रिपाठी | २५.०० |
| वेदचयनम् | विश्वम्भरनाथ त्रिपाठी | १२.०० |
| कादम्बरी : कथामुखम् | डॉ० देवर्षि सनाढ्य तथा विश्वम्भरनाथ त्रिपाठी | ८.०० |
| कादम्बरी महाश्वेतावृत्तान्त | ,, ,, | ६.८० |
| पालि-प्राकृत-अपभ्रंश संग्रह | डॉ० रामअवध पाण्डेय तथा डॉ० रविनाथ मिश्र | २०.०० |
| ऋग्वेदभाष्य भूमिका | डॉ० हरिदत्त शास्त्री | ६.०० |
| अभिनव का रस विवेचन | नगीनदास पारिख तथा डॉ० प्रेमस्वरूप गुप्त | २५.०० |
| अभिनव रस सिद्धान्त | डॉ० दशरथ द्विवेदी | ७.५० |
| दशरूपकम् | डॉ० रमाशंकर त्रिपाठी | २०.०० |
| अभिज्ञान शाकुन्तलम् | डॉ० रमाशंकर त्रिपाठी | २०.०० |
| संस्कृत शिक्षकम् | डॉ० गोपालशास्त्री 'दर्शनकेसरी | ४.०० |
| गोमहिमाभिनयनाटकम् | ,, ,, | ४.०० |
| वक्रोक्तिजीवितम् | डॉ० दशरथ द्विवेदी | १५.०० |
| शृंगारमञ्जरी सट्टकम् | पं० बाबूलाल शुक्ल | १०.०० |

**विश्वविद्यालय प्रकाशन**

चौक, वाराणसी

6·10